अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ॥1.1.42॥
खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  परमप्रीतः (रामः) अगस्त्यवचनात् ऐन्द्रं शरासनं खड्गम् अक्षयसायकौ तूणी च जग्राह।
- अन्वयार्थः

  अत्यन्तं प्रसन्नः अगस्त्यकथनात् इन्द्रेण प्रदत्तं धनुः कृपाणं नाशरहितबाणौ निषङ्गौ अग्रहीत्।

# अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ॥1.1.42॥
# खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ।

- पदपरिचयः
  - अगस्त्यवचनात् – अगस्त्यवचन – नपुं, पञ्चमी, एकवचनम्।
  - च, एव – अव्ययम्।
  - परमप्रीतः – परमप्रीत – पुं, प्रथमा, एकवचनम्।
  - ऐन्द्रं, शरासनम् – ऐन्द्र, शरासन – नपुं, द्वितीया, एकवचनम्।
  - खड्गम् – खड्ग – पुं, द्वितीया, एकवचनम्।
  - तूणी – तूणी – पुं, द्वितीया, द्विवचनम्।
  - अक्षयसायकौ – अक्षयसायक – पुं, द्वितीया, द्विवचनम्।
  - जग्राह – ग्रह – उपादाने, कर्तरि, लिट्, प्रपु, एकवचनम्।

# वसतस्तस्य रामस्य वने वनचरैस्सह ।
# ऋषयोऽभ्यागमन्सर्वे वधायासुररक्षसाम् ॥1.1.43 ॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  वनचरैः सह वने वसतः तस्य रामस्य (समीपं) सर्वे ऋषयः असुररक्षसां वधाय अभ्यागमन्।
- अन्वयार्थः

  (तदा) किरातैः सह अरण्ये निवसतः तस्य रामस्य समस्ताः मुनयः दानव-रक्षसां संहाराय समागतवन्तः ।

## वसतस्तस्य रामस्य वने वनचरैस्सह ।
## ऋषयोऽभ्यागमन्सर्वे वधायासुररक्षसाम् ॥1.1.43॥

- पदपरिचयः
  - वसतः – वसत् – पुं, षष्ठी, एकवचनम्।
  - तस्य – तद् – (सर्वनाम) पुं, षष्ठी, एकवचनम्।
  - रामस्य – राम – पुं, षष्ठी, एकवचनम्।
  - वने – वन – नपुं, सप्तमी, एकवचनम्।
  - वनचरैः – वनचर – पुं, तृतीया, बहुवचनम्।
  - सह – अव्ययम्।
  - सर्वे – सर्व – (सर्वनाम) पुं, प्रथमा, बहुवचनम्।
  - ऋषयः – ऋषि – पुं, प्रथमा, बहुवचनम्।
  - असुररक्षसाम् – असुररक्षस् – नपुं, षष्ठी, बहुवचनम्।
  - वधाय – वध – पुं, चतुर्थी, एकवचनम्।
  - अभ्यागमन् – अभि+आ+गमॢ – गतौ, कर्तरि, लिट्, प्रपु, बहुवचनम्।

स तेषां प्रतिशुश्राव राक्षसानां तथा वने ॥1.1.44॥
प्रतिज्ञातश्च रामेण वधस्संयति रक्षसाम् ।
ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥1.1.45॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

सः तेषां राक्षसानां (वधं) प्रतिशुश्राव। रामेण च अग्निकल्पानां दण्डकारण्यवासिनाम् ऋषीणां (सन्निधौ) संयति रक्षसां वधः प्रतिज्ञातः।

- अन्वयार्थः

रामः दानवानां (वधं) अङ्गीचकार। दशरथपुत्रेण च अग्नितुल्यानां दण्डकवने निवसतां मुनीनां युद्धे राक्षसानां संहारः प्रतिश्रुतः।

स तेषां प्रतिशुश्राव राक्षसानां तथा वने ॥1.1.44॥
प्रतिज्ञातश्च रामेण वधस्संयति रक्षसाम् ।
ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥1.1.45॥

- पदपरिचयः
  - सः – तद् – (सर्वनाम) पुं, प्रथमा, एकवचनम्।
  - तेषाम् – तद् – (सर्वनाम) पुं, षष्ठी, बहुवचनम्।
  - तथा, च – अव्ययम्।
  - रक्षसाम् – रक्षस् – नपुं, षष्ठी, बहुवचनम्।
  - प्रतिशुश्राव – प्रति+श्रु, कर्तरि, लिट्, प्रपु, एकवचनम्।
  - रामेण – राम – पुं, तृतीया, एकवचनम्।
  - वधः, प्रतिज्ञातः – वध , प्रतिज्ञात – पुं, प्रथमा, एकवचनम्।
  - संयति – संयत् – स्त्री, सप्तमी, एकवचनम्।
  - रक्षसाम् – रक्षस् – नपुं, षष्ठी, बहुवचनम्।
  - ऋषीणाम् - ऋषि – पुं, षष्ठी, बहुवचनम्।
  - अग्निकल्पानाम् – अग्निकल्प – पुं, षष्ठी, बहुवचनम्।
  - दण्डकारण्यवासिनाम् – दण्डकारण्यवासिन् – पुं, षष्ठी, बहुवचनम्।

## तेन तत्रैव वसता जनस्थाननिवासिनी ।
## विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥1.1.46॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  तत्रैव वसता तेन जनस्थाननिवासिनी कामरूपिणी राक्षसी शूर्पणखा विरूपिता।
- अन्वयार्थः

  तस्मिन् वने एव वासं कुर्वता रामेण दण्डकारण्यवासिनी मनोऽनुकूलरूपधारिणी निशाचरी शूर्पणखा-नाम्नी वैरूप्यं प्रापिता।

# तेन तत्रैव वसता जनस्थाननिवासिनी ।
# विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥1.1.46॥

- पदपरिचयः

- तेन – तद् – (सर्वनाम) पुं, तृतीया, एकवचनम्।
- तत्र – तद्धितान्तम् अव्ययम्।
- एव - अव्ययम्।
- वसता – वसत् – पुं, तृतीया, एकवचनम्।
- जनस्थाननिवासिनी, राक्षसी, कामरूपिणी - जनस्थाननिवासिनी, राक्षसी, कामरूपिणी – स्त्री, प्रथमा, एकवचनम्।
- शूर्पणखा, विरूपिता - शूर्पणखा, विरूपिता - स्त्री, प्रथमा, एकवचनम्।

ततश्शूर्पणखावाक्याद्दुद्युक्तान्सर्वराक्षसान् ।
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥1.1.47॥
निजघान वने रामस्तेषां चैव पदानुगान् ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

ततः शूर्पणाखावाक्याद् उद्युक्तान् सर्वराक्षसान् (तत्र विशिष्टं) खरं त्रिशिरसं दूषणं च राक्षसं तेषां पदानुगान् च रणे एव रामः निजघान।

- अन्वयार्थः

तदनन्तरं शूर्पणखोक्तवचनात् युद्धाय तत्परान् सर्वदानवान् खरनामानं त्रिशिरसाख्यं दूषणाभिधम् अपि असुरं राक्षसानां अनुचरान् अपि युद्धे एव राघवः हतवान्।

ततश्शूर्पणखावाक्यादुद्युक्तान्सर्वराक्षसान् ।
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥1.1.47॥
निजघान रणे रामस्तेषां चैव पदानुगान् ।

- पदपरिचयः
  - ततः – तद्धितान्तम् अव्ययम् ।
  - शूर्पणखावाक्यात् – शूर्पणखावाक्य – नपुं, पञ्चमी, एकवचनम् ।
  - तेषाम् – तद् – (सर्वनाम) पुं, षष्ठी, बहुवचनम् ।
  - उद्युक्तान्, सर्वराक्षसान्, पदानुगान् – उद्युक्त, सर्वराक्षस, पदानुग – पुं, द्वितीया, बहुवचनम् ।
  - खरं, दूषणं, राक्षसम् – खर, दूषण, राक्षस – पुं, द्वितीया, एकवचनम् ।
  - त्रिशिरसम् – त्रिशिरस् – पुं, द्वितीया, एकवचनम् ।
  - च, एव – अव्ययम् ।
  - रामः – राम – पुं, प्रथमा, एकवचनम् ।
  - रणे – रण – पुं, सप्तमी, एकवचनम् ।
  - निजघान – नि+हन – हिंसागत्योः, कर्तरि, लिट्, प्रपु, एकवचनम् ।

# वने तस्मिन्निवसता जनस्थाननिवासिनाम् ॥1.1.48॥
# रक्षसां निहतान्यासन्सहस्राणि चतुर्दश ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  तस्मिन् वने निवसता (रामेण) जनस्थाननिवासिनां रक्षसां चतुर्दशसहस्राणि निहतानि आसन्।
- अन्वयार्थः

  तस्मिन् दण्डकारण्यविपिने वासं कुर्वता दण्डकारण्यवासिनाम् असुराणां चतुर्दशसहस्रसंख्याकानि मारितानि आसन्।

# वने तस्मिन्निवसता जनस्थाननिवासिनाम् ॥1.1.48॥
# रक्षसां निहतान्यासन्सहस्राणि चतुर्दश ।

- पदपरिचयः
    - तस्मिन् – तद् – (सर्वनाम) नपुं, सप्तमी, एकवचनम्।
    - वने – वन – नपुं, सप्तमी, एकवचनम्।
    - निवसता – निवसत् – पुं, तृतीया, एकवचनम्।
    - जनस्थाननिवासिनाम् – जनस्थाननिवासिन् – पुं, षष्ठी, बहुवचनम्।
    - रक्षसाम् – रक्षस् – नपुं, षष्ठी, बहुवचनम्।
    - सहस्राणि, निहतानि – सहस्र, निहत – नपुं, प्रथमा, बहुवचनम्।
    - चतुर्दश – चतुर्दशन् – नपुं, प्रथमा, बहुवचनम्।
    - आसन् – अस – भुवि, कर्तरि, लङ्, प्रपु, बहुवचनम्।